# चम्पूरामायणे

# बालकाण्डम्

३३ –२७.०८.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# सङ्क्षेपः

- परमेश्वरस्य कपर्दे संलग्ना गङ्गा
- परमेश्वरं तोषयितुं भगीरथस्य प्रयत्नः
- गङ्गायाः सप्त धाराः – तिस्रः पूर्वां दिशं गताः, तिस्रः पश्चिमाम्
- भगीरथम् अनुगता भागीरथी
- जह्नोः यज्ञभूमिसंप्लुवः, जह्नुना पीता विसृष्टा च जाह्नवी
- सगरपुत्राणां सद्गतिप्राप्तिः

अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां विलोक्य पुरीं कस्येयमिति गाधिनन्दनमपृच्छत् ।

- अथ, दाशरथिः, आकर्णित-भागीरथी-कथः, ताम्, सरितम्, विलङ्घ्य, विशालाम्, विलोक्य, पुरीम्, कस्य, इयम्, इति, गाधि-नन्दनम्, अपृच्छत्।
- अथ = तदनन्तरम्
- दाशरथिः = श्रीरामः
- आकर्णित-भागीरथी-कथः = श्रुतगङ्गाप्रसङ्गः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education

# अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां विलोक्य पुरीं कस्येयमिति गाधिनन्दनमपृच्छत् ।

- तां सरितम् = गङ्गानदीम्
- विलङ्घ्य = सन्तीर्य
- विशालाम् = विशालानाम्नीम्
- पुरीम् = नगरीम्
- विलोक्य = अवलोक्य

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education ...

# अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां विलोक्य पुरीं कस्येयमिति गाधिनन्दनमपृच्छत् ।

- कस्य इयम् इति = कस्य राज्ञः एषा नगरी इति
- गाधिनन्दनम् = विश्वामित्रम्
- अपृच्छत् = पृष्टवान्
- तात्पर्य्यम् – श्रीरामः गङ्गायाः कथां श्रुत्वा तां नदीं सन्तीर्य विशालानाम्नीं नगरीं प्राप्य तस्याः विषये ज्ञातुं विश्वामित्रं पृष्टवान् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां विलोक्य पुरीं कस्येयमिति गाधिनन्दनमपृच्छत् ।

- आकर्णितभागीरथीकथः – भागीरथ्याः कथा, आकर्णिता भागीरथीकथा येन सः
- विलङ्घ्य – वि + “लघि गतौ” + ल्यप्
- अपृच्छत् – “प्रच्छ ज्ञीप्सायाम्” – लङ्, प्रथम.१

# सोऽप्येवमवोचत् ।

- सः, अपि, एवम्, अवोचत्
- सः = विश्वामित्रः अपि
- एवम् = इत्थम्
- अवोचत् = अकथयत्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

पुरा खलु सुरासुराणां सुधानिमित्तं मिथो विरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामास ।

- पुरा, खलु, सुर-असुराणाम्, सुधा-निमित्तम्, मिथः, विरोधे, प्रवृत्ते, मायाम्, विश्व-मोहिनीम्, विश्व-रूपः, प्रदर्श्य, दैतेय-निधनम्, शतधार-पाणिना, कारयामास।
- पुरा खलु = प्राक्काले
- सुरासुराणाम् = देवानां दानवानां च
- सुधानिमित्तम् = अमृतस्य कारणेन

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# मिथोविरोधे प्रवृत्ते मायां विश्वमोहिनीं

- मिथः = परस्परम्
- विरोधे = कलहे
- प्रवृत्ते [सति] = सञ्जाते
- मायाम् = इन्द्रजालक्रियाम्
- विश्वमोहिनीम् = जगन्मोहकारिणीम्

# विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामास ।

- विश्वरूपः = महाविष्णुः
- प्रदर्श्य = दर्शयित्वा
- शतधारपाणिना = वज्रायुधधरेण इन्द्रेण
- दैतेयनिधनम् = असुराणां विनाशं
- कारयामास = कारितवान्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

पुरा खलु सुरासुराणां सुधानिमित्तं मिथो विरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामास ।

- तात्पर्य्यम् – प्राक्काले समुद्रमथनसमये अमृतप्राप्तये देवासुराणां परस्परं कलहे सञ्जाते मोहिनीरूपं धृत्वा विष्णुः देवेभ्यः अमृतं प्रापय्य ततः प्रवृत्ते युद्धे देवेन्द्रस्य जयं प्रापितवान् ।
- सुरासुराणाम् – सुराश्च असुराश्च सुरासुराः, अथ वा सुरैः सङ्गताः असुराः (मयूरव्यंसकादिः), तेषाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

पुरा खलु सुरासुराणां सुधानिमित्तं मिथो विरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामास ।

- दैतेयनिधनम् – दितेः अपत्यानि पुमांसः दैतेयाः । दैतेयानां निधनम् ।
  “असुरा दैत्य-दैतेय-दनुज-इन्द्रारि-दानवाः” (अमरः)
- शतधारपाणिना – शतं धाराः अस्य इति शतधारं वज्रम् । शतधारं पाणौ यस्य सः, तेन । इकारान्तः, पुं, ३.१ ।
- कारयामास – “डुकृञ् करणे” + णिच् – लिट्, प्रथम.१

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

## तेषां जननी दितिरतिवेलमन्युः शतमन्युशासनं कमपि पुत्रं लब्धुकामा पत्युर्मारीचस्य वचनात्कुशप्लुवे सुचिरं तपश्चचार।

- तेषाम्, जननी, दितिः, अतिवेल-मन्युः, शत-मन्यु-शासनम्, कम्, अपि, पुत्रम्, लब्धुकामा, पत्युः, मारीचस्य, वचनात्, कुशप्लुवे, सु-चिरम्, तपः, चचार
- तेषाम् = दैतेयानाम्
- जननी = माता
- दितिः = दितिनाम्नी कश्यपपत्नी
- अतिवेलमन्युः = अत्यन्तं क्रुद्धा

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# शतमन्युशासनं कमपि पुत्रं लब्धुकामा

- शतमन्युशासनम् = इन्द्रघातिनम्
- कमपि पुत्रम् = बलवन्तं तनयम्
- लब्धुकामा [सती] = प्राप्तुम् इच्छन्ती
- पत्युः = भर्तुः
- मारीचस्य = मरीचिपुत्रस्य कश्यपस्य
- वचनात् = आदेशात्

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# पत्युर्मारीचस्य वचनात्कुशप्लुवे सुचिरं तपश्चचार।

- कुशप्लुवे = कुशप्लुवनामके तपोवने (विशालानगरं यत्र विद्यते तत्स्थले)
- सुचिरम् = बहुकालम्
- तपः चचार = तपश्चर्यां कृतवती
- तात्पर्य्यम् – पुत्राणां मारणेन क्रुद्धा दितिः इन्द्रघातिनं बलवन्तं पुत्रमपेक्ष्य भर्तुः कश्यपस्य आदेशानुगुणं कुशप्लुवनामके तपोवने बहुकालं तपः कृतवती

Vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

## तेषां जननी दितिरतिवेलमन्युः शतमन्युशासनं कमपि पुत्रं लब्धुकामा पत्युर्मारीचस्य वचनात्कुशप्लुवे सुचिरं तपश्चचार।

- अतिवेलमन्युः – वेलाम् अतिक्रान्तः अतिवेलः । अतिवेलः मन्युः यस्याः सा
- शतमन्युशासनम् – शतं मन्यवः यस्य सः । शतमन्योः शासनः, तम् ।
  "मन्युर्दैन्ये क्रतौ क्रुधि" (अमरः)
- लब्धुकामा – लब्धुं कामः यस्याः सा
- मारीचस्य – मरीचेः अपत्यं पुमान् – मरीचि + अण्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# तां कैतवेन शुश्रूषमाणः शतधारपाणिः पादकलितकचकलापामापन्ननिद्रामपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम।

- ताम्, कैतवेन, शुश्रूषमाणः, शतधार-पाणिः, पाद-कलित-कच-कलापाम्, आपन्न-निद्राम्, अपवित्रा, इति, निर्वर्ण्य, अवगाहित-तदीय-जठरः, सप्तधा, गर्भम्, निर्भिद्य, निर्जगाम।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तां कैतवेन शुश्रूषमाणः शतधारपाणिः पादकलितकचकलापामापन्ननिद्रामपवित्रेति

- ताम् = तपश्चरन्तीं दितिम्
- कैतवेन = कपटेन
- शुश्रूषमाणः = सेवमानः
- शतधारपाणिः = इन्द्रः
- पादकलितकचकलापाम् = (शय्यायां) पादस्थाने निक्षिप्तमस्तकाम्
- आपन्ननिद्राम् = प्राप्तस्वापाम्
- अपवित्रा = अशुचिः इति

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# निर्वर्ण्य अवगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम।

- निर्वर्ण्य = विलोक्य
- अवगाहिततदीयजठरः = तस्याः उदरं प्रविश्य
- गर्भम् = पिण्डम्
- सप्तधा = सप्तभिः प्रकारैः
- निर्भिद्य = विदार्य
- निर्जगाम = निर्गतः

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# तां कैतवेन शुश्रूषमाणः शतधारपाणिः पादकलितकचकलापामापन्ननिद्रामपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम।

- तात्पर्य्यम् – आपन्नसत्त्वां दितिं कपटेन सेवमानः इन्द्रः कदाचित् शय्यायां पादस्थाने शिरो निधाय सुप्तां ताम् अशुचिरिति वीक्ष्य तस्याः उदरं प्रविश्य पिण्डं सप्तधा विदार्य निर्गतः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

तां कैतवेन शुश्रूषमाणः शतधारपाणिः पादकलितकचकलापामापन्ननिद्रामपवित्रेति निर्वर्ण्याविगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम।

- कैतवेन – अकारान्तः, नपुं, ३.१ । "कपटोऽस्त्री व्याज-दम्भ-उपधयः छद्म-कैतवे" (अमरः)
- शुश्रूषमाणः – "श्रु श्रवणे" + सन् + शानच्
- पादकलितकचकलापाम् – पादे कलितः, कचस्य कलापः, पादकलितः कचकलापः यस्याः सा

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# तां कैतवेन शुश्रूषमाणः शतधारपाणिः पादकलितकचकलापामापन्ननिद्रामपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम।

- आपन्ननिद्राम् – आपन्ना निद्राम्
- निर्वर्ण्य – निर् + “वर्ण वर्णक्रियाविस्तारगुणवचनेषु” + ल्यप्
- अवगाहिततदीयजठरः – तस्याः इदं तदीयम् । तदीयं जठरम् । अवगाहितं तदीयजठरं येन सः ।
- निर्भिद्य – निर् + “भिदिर् विदारणे” + ल्यप्

Vyoma ॥वाचं [illegible]॥ Samskritam - Value Education [illegible]

# दितिरपि विदिततनयवृत्तान्ता तान्यपि खण्डान्याखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा।

- दितिः, अपि, विदित-तनय-वृत्तान्ता, तानि, अपि, खण्डानि, आखण्डलेन, सप्त-मरुतः, कारयित्वा, त्रिविष्टपम्, प्रविष्टा
- दितिः अपि
- विदिततनयवृत्तान्ता = गर्भभेदनं ज्ञात्वा
- तानि खण्डानि = गर्भशकलानि

# आखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा।

- आखण्डलेन = इन्द्रेण
- सप्त-मरुतः = वाताभिमानिदेवताः
- कारयित्वा = विधाप्य
- त्रिविष्टपम् = स्वर्गम्
- प्रविष्टा = गता

दितिरपि विदिततनयवृत्तान्ता तान्यपि खण्डान्याखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा।

- तात्पर्य्यम् – इन्द्रस्य गमनानन्तरं दितिः गर्भस्य विच्छेदनं विज्ञाय कोपं सन्त्यज्य इन्द्रद्वारा गर्भशकलानि वाताभिमानि-मरुद्देवताः कारयित्वा स्वयं स्वर्गं प्रविष्टा ।
- विदिततनयवृत्तान्ता – तनयस्य वृत्तान्तः, विदितः तनयवृत्तान्तः यया सा
- आखण्डलेन – "आखण्डलः सहस्राक्षः" (अमरः)

vyoma
॥वाचं वै पुनर्नवीकरिष्यामि॥
Samskritam · Value Education

# दितिरपि विदिततनयवृत्तान्ता तान्यपि खण्डान्याखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा।

- सप्त मरुतः –
- आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा । विवहाख्यः परिवहः परावह इति क्रमात्॥
- सप्तैते मारुतस्कन्धाः महर्षिभिरुदाहृताः। आवहो वर्तयेद्वायुर्मेघोल्कावृष्टिविद्युतः।
- वर्तयेत्प्रवहश्चाथ तथा मार्ताण्डमण्डलम्। वर्तयेदुद्वहश्चाथ तथा नक्षत्रमण्डलम्।
- संवहो मारुतस्कन्धस्तथा शीतांशुमण्डलम्। पञ्चमो विवहाख्यस्तु तथैव ग्रहमण्डलम्।
- सप्तर्षिचक्रं स्वर्गङ्गां षष्ठः परिवहस्तथा। परावहस्तथा वायुर्वर्तयेद्ध्रुवमण्डलम्॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

ततः।

अलम्बुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ।
विशालेति स्वनाम्नात्र विशालां विदधे पुरीम् ॥८९॥

- अलम्बुसायाम्, इक्ष्वाकोः, जातः, कश्चित्, महीपतिः, विशाला, इति, स्व-नाम्ना, अत्र, विशालाम्, विदधे, पुरीम्
- ततः = दितेः स्वर्गप्रवेशानन्तरम्
- विदधे = चकार
- कां विदधे? पुरीम् = नगरीम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अलम्बुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ।
# विशालेति स्वनाम्नात्र विशालां विदधे पुरीम् ॥८९॥

- कीदृशीं पुरीम्? विशालाम् = विस्तृताम्
- केन [अङ्किताम्] पुरीम्? स्वनाम्ना = स्वस्य नामधेयेन विख्याताम्
- केन नाम्ना? विशाला इति
- कुत्र विदधे? अत्र = दितेः तपोभूमौ

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अलम्बुसायामिक्षवाकोर्जातः कश्चिन्महीपतिः ।
# विशालेति स्वनाम्नात्र विशालां विदधे पुरीम् ॥८९॥

- कः विदधे? कश्चित् महीपतिः = नृपः
- कीदृशः महीपतिः? जातः = उद्भूतः
- कस्मात् जातः? इक्ष्वाकोः = रामस्य पूर्वजात् इक्ष्वाकुमहाराजात्
- कस्यां जातः? अलम्बुसायाम् = अलम्बुसानाम्न्यां स्वभार्यायाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

अलम्बुसायामिक्षवाकोर्जातः कश्चिन्महीपतिः ।
विशालेति स्वनाम्नात्र विशालां विदधे पुरीम् ॥८९॥

- अन्वयः – इक्ष्वाकोः अलम्बुसायां जातः कश्चित् महीपतिः अत्र स्वनाम्ना विशाला इति विशालां पुरीं विदधे ।
- तात्पर्य्यम् – दितेः स्वर्गप्रवेशानन्तरं तस्याः तपोभूमौ इक्ष्वाकु-अलम्बुसयोः पुत्रः विशालनामको महाराजः स्वस्य नाम्ना अङ्कितां “विशाला”नाम्नीं विस्तृतां नगरीं निर्मितवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# अलम्बुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ।
# विशालेति स्वनाम्नात्र विशालां विदधे पुरीम् ॥८९॥

- इक्ष्वाकोः – उकारान्तः पुं ५.१
- महीपतिः – मह्याः पतिः ।
- विदधे – वि + “डुधाञ् धारणपोषणयोः” – आत्मनेपदे लिट्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

तदनु तद्वास्तव्येन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो भगवान्विश्वामित्रस्तत्र निशीथिनीं नीत्वा मिथिलां प्रति प्रस्थितः प्रतपसामुत्तमस्य गौतमस्याश्रमं प्रदर्श्य तद्दारानुषक्तां कथामित्थमकथयत्।

- तत्-अनु, तत्-वास्तव्येन, सुमति-नाम्ना, नृपतिना, कृत-आतिथ्यः, स-राज-पुत्रः, भगवान्, विश्वामित्रः, तत्र, निशीथिनीम्, नीत्वा, मिथिलाम्, प्रति, प्रस्थितः, प्रतपसाम्, उत्तमस्य, गौतमस्य, आश्रमम्, प्रदर्श्य, तत्-दार-अनुषक्ताम्, कथाम्, इत्थम्, अकथयत्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तदनु तद्वास्तव्येन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो

- तदनु = विशालाविषये कथनानन्तरम्
- तद्वास्तव्येन = विशालानगरीनिवासिना
- सुमतिनाम्ना = सुमति-नामधेयेन
- नृपतिना = महाराजेन
- कृतातिथ्यः = विहित-उपचारः
- सराजपुत्रः = रामलक्ष्मणाभ्यां सहितः

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# भगवान्विश्वामित्रस्तत्र निशीथीनीं नीत्वा मिथिलां प्रति प्रस्थितः

- भगवान् = पूज्यः
- विश्वामित्रः = कौशिकः
- तत्र = विशालायाम्
- निशीथीनीम् = रात्रिम्
- नीत्वा = यापयित्वा
- मिथिलां प्रति = मिथिलानगरीम् उद्दिश्य
- प्रस्थितः = निर्गतः

# प्रतपसामुत्तमस्य गौतमस्याश्रमं प्रदर्श्य

- प्रतपसाम् = प्रकृष्टतपस्विनाम्
- उत्तमस्य = श्रेष्ठस्य
- गौतमस्य = गौतममहर्षेः
- आश्रमम् = तपोवनम्
- प्रदर्श्य = दर्शयित्वा

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तद्द्वारानुषक्तां कथामित्थमकथयत्।

- तद्द्वारानुषक्ताम् = गौतमपत्न्याः अहल्यायाः सम्बन्धिनम्
- कथाम् = वृत्तान्तम्
- इत्थम् = एवम्
- अकथयत् = अवर्णयत्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

तदनु तद्वास्तव्येन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो भगवान्विश्वामित्रस्तत्र निशीथिनीं नीत्वा मिथिलां प्रति प्रस्थितः प्रतपसामुत्तमस्य गौतमस्याश्रमं प्रदर्श्य तद्वारानुषक्तां कथामित्थमकथयत्।

- तात्पर्य्यम् – विशालानगरस्य महाराजेन सुमतिना विहोतोपचारः विश्वामित्रः रामलक्ष्मणाभ्यां सह तत्रैव रात्रिं यापयामास । परेद्युः प्रातः मिथिलां गच्छन् मार्गे मुनिश्रेष्ठस्य गौतमस्य तपोवनं दर्शयित्वा तस्य पत्न्याः अहल्यायाः वृत्तान्तम् एवम् अवर्णयत् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- विशालानगरी – दितेः सप्तमरुतां च कथा, विशालायाः परिचयः
- विशालामतीत्य मिथिलामार्गे गौतमाश्रमे अहल्यावृत्तान्तस्य आरम्भः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in